प्रद्युम्नशिखरासीनां मातृचक्रोपशोभिताम् ।
पीठेश्वरीम् शिलारूपां शारिकांप्रणमाम्यहम् ॥



# स्तोत्र पाठ-संग्रह

सम्पादक

श्री श्री जगद्-अम्बा शारिका चक्रेश्वर संस्था,
हारी-पर्वत

# श्री भवानीसहस्रनामस्तोत्रनामावली











प्रकाशक :–

**श्री जगदम्बा शारिका चक्रेश्वर संस्था**

हारीपर्वत, श्रीनगर–काश्मीर।



## -: आमुख :-

ओं श्री भवान्यै नमः ।

श्री माताभवानी के अन्यान्यस्तोत्रग्रन्थों में भवानी सहस्रनाम ग्रन्थ का काश्मीर में अत्याधिक प्रचार है, जिसका मुख्यकारण यह है कि यह स्तोत्रग्रन्थ अन्य स्तोत्रों की अपेक्षा सरल तथा साधकों की मनोकामना का पूर्ण करने वाला अनुभव का विषय हो चुका है। यह स्तोत्र रुद्रयामल तंत्र के अन्तर्गत है, इसके कई संस्करण सर्वप्रथम बम्बई तथा काश्मीर में छप चुके हैं, जिनमें पाठान्तर अवश्य दृष्टिगोचर होता है । खेद है यह आधार ग्रन्थ रुद्रयामल ग्रन्थ में अब उपलब्ध नही होता है, अतः हमने सतारवीं शताब्दी के महान सिद्ध कवि एवं तांत्रिक चूडामणि श्री साहिब कौल के देवीनामविलास के आधार पर इस स्तोत्रग्रन्थ की नामावली को प्रकाशित करने का सफल प्रयास किया है । इस कार्य का श्रेय श्री अमरनाथ साबनी को प्राप्त है, जिसके अनथक प्रयत्न के मूलस्वरूप प्रस्तुत स्तोत्र वर्तमान नामावली के रुप में परिणत हुआ है।

श्री जगदम्बा शारिका चक्रेश्वर संस्था ने लुप्तप्राप्य धार्मिक ग्रन्थों के प्रकाशन करने को बीडा उठाया है इस कार्य का श्री-गणेश कई गत वर्षों से संस्था की ओर से हुआ है जिन में मुख्य प्रकाशित ग्रन्थ श्री शारिका लीलालहरी, श्री भौनकाक के रहस्यमय वाक्य, तथा श्री राज्ञेश्वरी स्तोत्र उल्लेखनीय है।

अन्त में मैं श्री महेश्वरनाथ जा "संतोषी" तथा श्री दीनानाथ जी शास्त्री को धन्यवाद देता हूँ जिन उक्त महानुभावों ने अपना अमूल्य समय ग्रंथ का संशोधन तथा प्रूफ शुद्ध करने में व्यय किया, जिसके फलस्वरूप में यह ग्रन्थ आपके सन्मुख है।

आशा है कि भक्तजन इस पुस्तक से लाभान्वित होंगे।

दुर्गाष्टमी

तिथि : २९-९-१९७९

नीलकण्ठ नहरू

प्रधान।

श्री जगदम्बा शारिका चक्रेश्वर संस्था।

हारी पर्वत, श्रीनगर, काश्मीर।

ओं

# अथ भवानीनामसहस्रस्तोत्रनामावली ।



ॐ नमो भवान्यै ॥

अरिशङ्खकृपाणखेटबाणान सुधनुः शूलकतर्जनीं दधाना । भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥१॥ ओंशङ्खत्रिशूलशरचापकरां त्रिनेत्रां तिग्मेतरांशुकलया विकसत्किरीटाम् । सिंहस्थितामसुरसिद्धनुतां च दुर्गां दूर्वानिभां दुरितदुःखहरां नमामि ॥२॥ अकुलकुलपतन्ती चक्रमध्ये स्फुरन्ती । मधुरमधुपिबन्ती कण्टकान्भक्षयन्ती ॥ दुरितमपहरन्ती साधकान्पोषयन्ती । जयति जगति देवी सुन्दरी क्रीडयन्ती ॥३॥ चतुर्भुजामेकवक्त्रां पूर्णेन्दुवदनप्रभाम् । खड्गशक्तिधरां देवीं वरदाभयधारिणम् ॥ प्रेतसंस्थां महा-

रौद्रीं भुजगेनोपवीतिनीम् । भवानीं कालसंहार-बद्धमुद्राविभूषिताम् ॥ जगत्स्थितिकरीं ब्रह्मविष्णु-रुद्रादिभिः सुरैः । स्तुतां तां परमेशानीं नौम्यहं विघ्नहारिणीम् ॥ ॐनमो भवान्यै ॥ कैलासशिखरे रम्ये देवदेवं महेश्वरम् । ध्यानोपरतमासीनं प्रस-न्नमुखपङ्कजम् ॥ सुरासुरशिरोरत्नरञ्जिताङ्घ्रियुगं प्रभुम् । प्रणम्य शिरसा नन्दी बद्धाञ्जलिरभा षत ॥ श्रीनन्दिकेश्वर उवाच ॥ देवदेव जगन्नाथ संशयोस्ति महान्मम । रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तिवत्सलम् ॥ देवतायास्त्वया कस्याः स्तोत्रमेतद्दिवानिशम् । पठ्यतेऽविरतं नाथ ! त्वत्तः किमपरः परः ॥ इति पृष्टस्तदा देवो नन्दिकेन जगद्गुरुः । प्रोवाच भगवानेको विकसन्नेत्रपङ्कजः ॥ श्रीभगवानुवाच ॥ साधु साधु गणश्रेष्ठ पृष्टवान-सि मां च यत् । स्कन्दस्यापि च यद्गोप्यं रहस्यं कथयामि तत् ॥ पुरा कल्पक्षये लोका-

न्सिसृक्षुर्मूढचेतना । गुणत्रयमयी शक्तिर्मूलप्रकृ-
तिसंज्ञिता ॥ तस्यामहं समुत्पन्नस्तत्त्वैस्तैर्महदा-
दिभिः चेतनेति ततः शक्तिर्मां काप्यालिङ्ग्य तस्थुषी ।
हेतुः सङ्कल्पजालस्य मनोधिष्ठायिनी शुभा ॥
इच्छेति परमा शक्तिरुन्मिमील ततः परम् । ततो
वागिति विख्याता शक्तिः शब्दमयी परा ॥ प्रा-
दुरासीज्जगन्माता वेदमाता सरस्वती । ब्राह्मी च
वैष्णवी रौद्री कौमारी पार्वती शिवा ॥ सिद्धिदा
बुद्धिदा शान्ता सर्वमङ्गलदायिनी । तयैतत्सृज्यते
विश्वमनाधारं च धार्यते ॥ तयैतत्पाल्यते सर्वं
तस्यामेव प्रलीयते । अर्चिता प्रणता ध्याता
सर्वभावविनिश्चिता ॥ आराधिता स्तुता सैव
सर्वसिद्धिप्रदायिनी । तस्या अनुग्रहादेव तामेव
स्तुतवानहम् । सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्रा-
णिपूजितैः । स्तवेनानेन सन्तुष्टा मामेव प्रवि-
वेश सा ॥ तदारभ्य मया प्राप्तमैश्वर्यं पदमु-
त्तमम् । तत्प्रभावान्मया सृष्टं जगदेतच्चराचरम् ॥

ससुरासुरगन्धर्वयक्षराक्षसमानवम् । सपन्नगं ससमुद्रं सशैलवनकाननम् ॥ सराशिग्रहनक्षत्रं पञ्चभूतगुणान्वितम् । नन्दिन्नामसहस्रेण स्तवेनानेन सर्वदा । स्तुवे परापरां शक्तिं ममानुग्रहकारिणीम् । इत्युक्त्वोपरतं देवं चराचरगुरुं विभुम् । प्रणम्य शिरसा नन्दी प्रोवाच परमेश्वरम् ॥ श्रीनन्दिकेश्वर उवाच ॥ भगवन्देवदेवेश लोकनाथ जगत्पते । भक्तोस्मि तव दासोस्मि प्रसादः क्रियतां मयि । देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरैरपि । श्रोतुमिच्छाम्यहं देव प्रभावमपि चास्य तु ॥ श्रीभगवानुवाच ॥ शृणुनन्दिन्महाभाग स्तवराजमिमं शुभम् । सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम् । शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः । त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्तवः ॥ अस्य श्रीभवानीनामसहस्रस्तवराजस्य, महादेवीऋषि, अनुष्टुप्छन्दः, आद्या शक्तिः, भगवती भवानी देवता,

ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं, अमुककामना सिद्ध्यर्थे पाठे/होमे विनियोगः ॥ अथ करन्यासः ॐ एकवीरायै अङ्गुष्ठाभ्यां नमः ॐमहामायायै तर्जनीभ्यां नमः, ॐ पार्वत्यै मध्यमाभ्यां नमः, ॐ गिरीशप्रियायै अनामिकाभ्यां नमः, ॐ गौर्यै कनिष्ठिकाभ्यां नमः, ॐ करालिन्यै करतलकरपृष्ठाभ्यां नमः ॥ अथ षडङ्गन्यासः ॥ ॐ एकवीरायै हृदयाय नमः, ॐ महामायायै शिरसे स्वाहा, ॐ पार्वत्यै शिखायै वषट्, ॐ गिरीशप्रियायै कवचायहुम, ॐ गौर्यै नेत्राभ्यां वौषट्, ॐ करालिन्यै अस्त्रायफट् ॥ प्राणायामः । ध्यानम् । बालार्कमण्डलाभासं चतुर्बाहुं त्रिलोचनाम् । पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां भजे ।१। अर्धेन्दुमौलिममलाममराभिवन्द्यामम्भोजपाशसृणिरक्तकपालहस्ताम् रक्ताङ्ग... त्रिनेत्रां ध्याये शिव...

वनितां मधुविह्वलाङ्गीम् । बीजत्रयाय विद्महे तत्प्रधानाय धीमहि, तन्नः शक्तिः प्रचोदयात् । ३ । मूलम् "ओं श्रींश्रीं ओं ओं ह्लीं श्रीं श्रीं भवानि हुं फट् स्वाहा" ।१०८।।



नोट :- प्रति सौवीं आहुति से पूर्व यह मंत्र पढ़िए :-

तेजोसि शुक्रमसि ज्योतिरसि धामासि प्रियन्देवा-नामना दृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि देवेभ्यस्त्वा यज्ञेभ्यो गृह्णामि ॥

ॐमहाविध्यायै नमः/स्वाहा
जगन्मात्रे ,,
महालक्ष्म्यै ,,
शिवप्रियायै ,,
विष्णुमायायै ,,
शुभायै ,,
शान्तायै ,,
सिद्धायै ,,
सिद्धसरस्वत्यै ,,
क्षमायै ,,
कान्त्यै ,,
प्रभायै ,,
ज्योत्स्नायै ,,
पार्वत्यै ,,
सर्वमङ्गल्यायै ,,
हिङ्गुलायै ,,
चण्डिकायै ,,
दान्तायै ,,
पद्मायै ,,
लक्ष्म्यै

हरिप्रयायै नमः/स्वाहा
त्रिपुरायै ,,
नन्दिन्यै ,,
नंदायै ,,
सुनन्दायै
सुरवन्दितायै ,,
यज्ञविद्यायै ,,
महामायायै ,,
वेदमात्रे ,,
सुधायै ,,
धृतये ,,
प्रीतये ,,
प्रथायै ,,
प्रसिद्धायै ,,
मृडान्यै ,,
विन्ध्यवासिन्यै ,,
सिद्धविद्यायै ,,
महाशक्तये ,,
पृथ्व्यै ,,
४० नारदसेवितायै ,,

| | | |
|---|---|---|
| ४१ ॐ पुरुहूतप्रियायै नमः/स्वाहा | | मृदुहासिन्यै नमः/स्वाहा |
| कान्तायै | ,, | कुलवागीश्वर्यै ,, |
| कामिन्यै | ,, | नित्यायै ,, |
| पद्मलोचनायै | ,, | नित्यक्लिन्नायै ,, |
| प्रह्लादिन्यै | ,, | कृशोदर्यै ,, |
| महामात्रे | ,, | कामीश्वर्यै ,, |
| दुर्गायै | ,, | नीलायै ,, |
| दुर्गतिनाशिन्यै | ,, | भीरुण्डायै ,, |
| ज्वालामुख्यै | ,, | वह्निवासिन्यै ,, |
| सुगोत्रायै | ,, | लम्बोदर्यै ,, |
| ज्योतिषे | ,, | महाकाल्यै ,, |
| कुमुदहासिन्यै | ,, | विद्याविद्येश्वर्यै ,, |
| दुर्गमायै | ,, | नरेश्वर्यै ,, |
| दुर्लभायै | ,, | सत्यायै ,, |
| विद्यायै | ,, | सर्वसौभाग्यवर्धन्यै |
| स्वर्गतये | ,, | संकर्षण्यै ,, |
| पुरवासिन्यै | ,, | नारसिंह्यै ,, |
| अपर्णायै | ,, | वैष्णव्यै ,, |
| शाम्बरीमायायै | ,, | महोदर्यै ,, |
| मदिरायै | ,, | ८० कात्यायन्यै ,, |

धामासि जातवेदसं०

१ ॐ चम्पायै नमः/स्वाहा
सर्वसम्पतिकारिण्यै ,,
नारायण्यै ,,
महानिद्रायै ,,
योगनिद्रायै ,,
प्रभावत्यै ,,
प्रज्ञापारमितायै ,,
प्रज्ञायै ,,
तारायै ,,
मधुमत्यै ,,
मधवे ,,
क्षीरार्णवसुधाहारायै ,,
कालिकायै ,,
सिंहवाहिन्यै ,,
ओंकारायै ,,
वसुधाकारायै ,,
चेतनायै ,,
कोपनाकृत्यै ,,
अर्धबिन्दुधरायै ,,

१०० धारायै नमः/स्वाहा

ध्यानम्

ॐ विश्वमात्रे ,,
कलावत्यै ,,
पद्मावत्यै ,,
सुवस्त्रायै ,,
प्रबुद्धायै ,,
सरस्वत्यै ,,
कुण्डासनायै ,,
जगद्धात्र्यै ,,
बुद्धमात्रे ,,
जिनेश्वर्यै ,,
जिनमात्रे ,,
जिनेन्द्रायै ,,
शारदायै ,,
हंसवाहनायै ,,
राज्यलक्ष्म्यै ,,
वषट्कारायै ,,
११७ सुधाकारायै ,,

तेजोऽसि शुक्रमसि ज्योतिरसि

| ११८ ॐसुधात्मिकायै | नमः/स्वाहा | शतंद्रुकायै | नमः/स्वाहा |
|---|---|---|---|
| राजनीतये | ,, | सरयवे | ,, |
| त्रय्यै | ,, | चंद्रभागायै | ,, |
| वार्तायै | ,, | कौशिक्यै | ,, |
| दण्डनीतये | ,, | गण्डक्यै | ,, |
| क्रियावत्यै | ,, | शुचये | ,, |
| सद्भूतये | ,, | नर्मदायै | ,, |
| तारिण्यै | ,, | कर्मनाशायै | ,, |
| श्रद्धायै | ,, | चर्मण्वत्यै | ,, |
| सद्गतये | ,, | देविकायै | ,, |
| सत्परायणायै | ,, | वेत्रवत्यै | ,, |
| सिन्धवे | ,, | वितस्तायै | ,, |
| मंदाकिन्यै | ,, | वरदायै | ,, |
| गङ्गायै | ,, | नरवाहनायै | ,, |
| यमुनायै | ,, | सत्यै | ,, |
| सरस्वत्यै | ,, | पतिव्रतायै | ,, |
| गोदावर्यै | ,, | साध्वयै | ,, |
| विपाशायै | ,, | सुचक्षुषे | ,, |
| कावेर्यै | ,, | १५५ कुण्डवासन्यै | ,, |

१५६ ॐएकचक्षुषे नमः/स्वाहा
सहस्राक्ष्यै ,,
सुश्रोण्यै ,,
भगमालिन्यै ,,
सेनायै ,,
श्रोणये ,,
पताकायै ,,
सुव्यूहायै ,,
युद्धकांक्षिण्यै ,,
पताकिन्यै ,,
दयारम्भायै ,,
विपञ्चीपञ्चमप्रियायै
परापरकलाकान्तायै
त्रिशक्तये ,,
मोक्षदायिन्यै ,,
ऐन्द्र्यै ,,
माहेश्वर्यै ,,
ब्राह्म्यै ,,
कौमार्यै ,,
कुलवासिन्यै ,,

ॐइच्छायै नमः/स्वाहा
भगवत्यै ,,
शक्तये ,,
कामधेन्वे ,,
कृपावत्यै ,,
वज्रायुधायै ,,
वज्रहस्तायै ,,
चण्ड्यै ,,
चण्डपराक्रमायै ,,
गौर्यै ,,
सुवर्णवर्णायै ,,
स्थितिसंहारकारिण्यै
एकायै ,,
अनेकायै ,,
महेज्यायै ,,
शतबाहवे ,,
महाभुजायै ,,
भुजङ्गभूषणाय ,,
भूषायै ,,
१९५ षट्चक्रक्रमवासिन्यै

१९६ षट्चक्रभेदिन्यै नमः/स्वाहा
श्यामायै ,,
कायस्थायै ,,
कायवर्जितायै ,,
तेजाऽसि० ,,
२०० ॐ सुस्मितायै स्वाहा

(ध्यानम्)

ॐ सुमुख्यै ,,
क्षमायै ,,
मूलप्रकृतये ,,
ईश्वर्यै ,,
अजायै ,,
बहुवर्णायै ,,
पुरुषार्थप्रवर्तिन्यै ,,
रक्तायै ,,
नीलायै ,,
सितायै ,,
श्यामायै ,,
कृष्णायै ,,
२१३ पीतायै ,,
२१४ कर्बुरायै नमः/स्वाहा
क्षुधायै ,,
तृष्णायै ,,
जरावृद्धायै ,,
तरुण्यै ,,
करुणालयायै ,,
कलायै ,,
काष्ठायै ,,
मुहूर्तायै ,,
निमेषायै ,,
कालरूपिण्यै ,,
सुकर्णरसनायै ,,
नासायै ,,
चक्षुषे ,,
स्पर्शवत्यै ,,
रसायै ,,
गन्धप्रियायै ,,
सुगन्धायै ,,
सुस्पर्शायै ,,
२३३ मनोगतये ,,

ॐ मृगनाभये नमः/स्वाहा
मृगाक्ष्यै ,,
कर्पूरामोदधारिण्यै
पद्मयोनये ,,
सुकेश्यै ,,
सुलिङ्गायै ,,
भगरुपिण्यै ,,
योनिमुद्रायै ,,
महामुद्रायै ,,
खेचर्यै ,,
खगगामिन्यै ,,
मधुश्रिये ,,
माधवीवल्लयै ,,
मधुमत्तायै ,,
मदोद्धतायै ,,
मातङ्गयै ,,
शुकहस्तायै ,,
पुष्पबाणायै ,,
इक्षुचापिण्यै ,,
रक्ताम्बरधरायै ,,

क्षीबायै नमः/स्वाहा
रक्तपुष्पावतंसिन्यै ,,
शुभ्राम्बरधरायै ,,
धीरायै ,,
महाश्वेतायै ,,
वसुप्रयायै ,,
सुवेणये ,,
पद्महस्तायै ,,
मुक्ताहारविभूषणायै
कर्पूरामोदनिश्वासायै
पद्मन्यै ,,
पद्ममन्दिरायै ,,
खड्गिन्यै ,,
चक्रहस्तायै ,,
भुसुण्ड्यै ,,
परिधायुधायै ,,
चापिन्यै ,,
पाशहस्तायै ,,
त्रिशूलवरधारिण्यै ,,
२७३ सुबाणायै ,,

२७४ शक्ति हस्तायै/नमः
मयूरवरवाहनायै ,,
वरायुधधरायै ,,
वीरायै ,,
वीरपानमदोत्कटायै
वसुधायै ,,
वसुधारायै ,,
जयायै ,,
शाकम्भर्यै ,,
शिवायै ,,
विजयायै ,,
जयन्त्यै ,,
सुस्तन्यै ,,
शत्रुनाशिन्यै ,,
अन्तर्वत्न्यै ,,
वेदशक्तये ,,
वरदायै ,,
वरधारिण्यै ,,
शीतलायै ,,
सुशीलायै ,,

बालग्रहविनाशिन्यै नमः/स्वाहा
कुमार्यै ,,
सुपर्वायै ,,
कामाख्यायै ,,
कामवन्दितायै ,,
जालन्धर धरायै ,,
ॐ तेजोऽसि इत्यादि
२०० अनन्तायै नमः
(ध्यानम्)
कामरुपनिवासिन्यै ,,
कामबीजवत्यै ,,
सत्यायै ,,
सत्यधर्मपरायणायै
स्थूलमार्गस्थितायै ,,
सूक्ष्मायै ,,
सूक्ष्मबुद्धिप्रबोधिन्यै ,,
षट्कोणायै ,,
त्रिकोणायै ,,
त्रिनेत्रायै ,,
३११ त्रिपुरसुन्दर्यै ,,

३१२ ॐ वृषप्रियायै नमः/स्वाहा
वृषारुढायै ,,
महिषासुरघातिन्यै ,,
सुम्भर्दपहरायै ,,
दीप्तायै ,,
दीप्तपावकसन्निभायै,,
कपालभूषणायै ,,
काल्यै ,,
कपालमालधारिण्यै ,,
कपालकुण्डलायै ,,
दीर्घायै ,,
शिवादूत्यै ,,
घनध्वनये ,,
सिद्धिदायै ,,
बुद्धिदायै ,,
नित्यायै ,,
सत्यमार्गप्रबोधिन्यै ,,
कुम्बग्रीवायै ,,
वसुमत्यै ,,
छत्रच्छायाकृतालयायै
जगद्गर्भायै ,,
कुण्डलिन्यै ,,
भुजगाकारशायिन्यै
प्रोल्लसत्सप्तपद्मायै ,,
नाभिनालमृणालिन्यै
मूलाधारायै ,,
निराकारायै ,,
वह्निकुण्डकृतालयायै
वायुकुण्डसुखासीनायै
निराधारायै ,,
निराश्रयायै ,,
श्वासोच्छ्वासगतये ,,
जीवायै ,,
ग्राहिण्यै ,,
वह्निसंश्रयायै ,,
वह्नितन्तुसमुत्थानायै
षड्रसास्वादलोलुपायै
तपस्विन्यै ,,
तपःसिद्धये ,,
३५१ तापस्यै ,,

३५२ ॐ तपःप्रियायै स्वाहा/नमः
तपोनिष्टायै ,,
तपोयुक्तायै ,,
तपसः सिद्धिदायिन्यै
सप्तधातुमयी मूर्तये
सप्तधात्वन्तराश्रयायै
देहपुष्टये ,,
मनस्तुष्टये ,,
अन्नपुष्टये ,,
बलोद्धतायै ,,
ओषधये ,,
वैद्यमात्रे ,,
द्रव्यशक्तये ,,
प्रभाविन्यै ,,
वैद्यायै ,,
वैद्यचिकित्सायै ,,
सुपथ्यायै ,,
रोगनाशिन्यै ,,
मृगयायै ,,
मृगमांसादायै ,,

मृगत्वचे ,,
मृगलोचनायै ,,
वागुरायै ,,
बन्धरुपायै ,,
बधरुपायै ,,
बधोद्धतायै ,,
वन्द्यै ,,
वन्दिस्तुताकारायै ,,
काराबन्धविमोचन्यै
श्रङ्खलायै ,,
खलहायै ,,
विद्युते ,,
दृढबन्धमिमोचिन्यै ,,
अम्बिकायै ,,
अम्बालिकायै ,,
अम्बायै ,,
स्वक्षायै ,,
साधुजनार्चितायै ,,
कौलिक्यै ,,
कुलविद्यायै ,,
३९२ सुकुलायै ,,

९३ ॐ कुलपूजितायै स्वः/नमः
कालचक्रभ्रमायै ,,
भ्रान्तायै ,,
विभ्रमायै ,,
भ्रमनाशिन्यै ,,
वात्यात्यै ,,
मेघ माल्यायै ,,
तेजोऽसि इत्यादि
सुवृष्टये स्वाहा/नमः
(ध्यानम्)
सस्यवर्द्धिन्यै ,,
अकारायै ,,
इकारायै ,,
उकारायै ,,
ऐकाररुपिण्यै ,,
ह्रींकार्यै ,,
बीजरुपायै ,,
क्लींकारायै ,,
अम्बरवासिन्यै ,,
सर्वाक्षरमयी शक्तये
अक्षरायै ,,

वर्णमालिन्यै ,,
सिंदूरारुणवक्त्रायै ,,
सिंदूरतिलकप्रियायै
वश्यायै
वश्यबीजायै ,,
लोकवश्यविभाविन्यै
नृपवश्यायै ,,
नृपैः सेव्यायै ,,
नृपवश्यकर्यै ,,
प्रियायै ,,
महिष्यै ,,
नृपमान्यायै ,,
नृमान्यायै ,,
नृपनन्दन्यै ,,
नृपधर्ममय्यै ,,
धन्यायै ,,
धनधान्यविवर्द्धिन्यै
चतुर्वर्णमयी मूर्तये ,,
चतुवर्णैश्च पूजितायै
सर्वधर्ममयी सिद्धये ,,
४३२ चतुराश्रमवासिन्यै

४३३ ॐ ब्राह्मण्यै ,,
क्षत्रियायै ,,
वैश्यायै ,,
शूद्रायै ,,
अवरवर्णजायै ,,
वेदमार्गरतायै ,,
यज्ञायै ,,
वेदविश्वविभाविन्यै ,,
अस्त्रशस्त्रमयी विद्यायै
वरशास्त्रधारिण्यै ,,
सुमेधायै ,,
सत्यमेधायै ,,
भद्रकाल्यै ,,
अपराजितायै ,,
गायत्र्यै ,,
सत्कृतये ,,
संध्यायै ,,
सावित्र्यै ,,
त्रिपदाश्रयायै ,,
त्रिसन्ध्यायै ,,

ॐ त्रिपद्यै स्वः/नमः
धात्र्यै ,,
सुपर्वायै ,,
सामगायिन्यै ,,
पाञ्चाल्यै ,,
बालिकायै ,,
बालायै ,,
बालक्रीडायै ,,
सनातन्यै ,,
गर्भाधारधरायै ,,
शून्यायै ,,
गर्भाशयनिवासिन्यै ,,
सुरारिघातिनी कृत्यायै
पूतनायै ,,
तिलोत्तमायै ,,
लज्जायै ,,
रसवत्यैं ,,
नन्दायैं ,,
भवान्यै ,,
४७२ पापनाशिन्यैं ,,

४७३ ॐ पट्टाम्बरधरायै स्वाहा
गीतये ,,
सुगीतये ,,
ज्ञानलोचनायै ,,
सप्तस्वरमयीतन्त्र्यै ,,
षड्जमध्यमधैवतायै
मूर्च्छनाग्रामसंस्थानायै
स्वस्थायै ,,
स्वस्थानवासिन्यै ,,
अट्टहासिन्यै ,,
प्रेतायै ,,
प्रेतासननिवासिन्यै
नृतगीतप्रियायै ,,
अकामायै ,,
तुष्टिदायै ,,
पुष्टिदायै ,,
अक्षयायै ,,
निष्टायै ,,
सत्यप्रियायै ,,
प्रज्ञायै ,,

लोकेश्यै ,,
सुरोत्तमायै ,,
सुविषायै ,,
ज्वालिन्यै ,,
ज्वालायै ,,
विषमोहार्तिनाशिन्यै
विषारये ,,
(तेजोऽसि इत्यादि)
नागदमन्यै
(अथ ध्यानम)
कुरु कुलायै स्वाहा/नमः
अमृतोद्भवायै ,,
भूतभीतिहरारक्षायै
भूतावेशविनाशिन्यै ,,
रक्षोघ्न्यै ,,
राक्षस्यै ,,
रात्रये ,,
दीर्घनिद्रायै ,,
दिवागतये ,,
५१० चन्द्रिकायै ,,

५११ ॐ चन्द्रकान्तये स्वाहा
सर्यकान्तये ,,
निशांचर्यै ,,
डाकिन्यै ,,
शाकिन्यै ,,
शिष्यायै ,,
हाकिन्यै ,,
चक्रवाकिन्यै ,,
सितासितप्रियायै ,,
स्वङ्गायै ,,
सकलायै ,,
वनदेवतायै ,,
गुरुरूपधरायै ,,
गुर्व्यै ,,
मृत्यवे ,,
मार्यै ,,
विशारदायै ,,
महामार्यै ,,
विनिद्रायै ,,
तन्द्रायै ,,
मृत्युविनाशिन्यै ,,
चंद्रमण्डलसंकाशायै
चंद्रमण्डलवासिन्यै ,,
अणिमादिगुणोपतायै
सुस्पृहायै ,,
कामरुपिण्यै ,,
अष्टसिद्धिप्रदायै ,,
प्रौढायै ,,
दुष्टदानवघातिन्यै ,,
अनादिनिधनापुष्टये
चतुर्बाहूवे ,,
चतुर्मुख्यै ,,
चतुःसमुद्रशयनायै ,,
चतुर्वर्गफलप्रदायै ,,
काशपुष्पप्रतीकाशायै
शरत्कुमदलोचनायै ,,
भूजायै ,,
भव्यायै ,,
भविष्यायै ,,
५५० शैलजायै

५५१ ॐशैलवासिन्यै स०/नमः
वाममार्गरतायै ,,
वनमायै ,,
शिववामाङ्गवासिन्यै
वामाचारप्रियायै ,,
तुष्टायै ,,
लोपमुद्रायै ,,
प्रबोधिन्यै ,,
भूतात्मने ,,
परमात्मने ,,
भूतभाविविभाविन्यै,,
मङ्गलायै ,,
सुशीलायै ,,
परमार्थप्रबोधिकायै
दक्षिणायै ,,
दक्षिणामूर्तये ,,
सुदक्षिणायै ,,
हरिप्रियायै ,,
योगिन्यै ,,
योगयुक्तायै ,,

योगाङ्गायै स०:/नमः
ध्यान शालिन्यै ,,
योगपट्टधरायै ,,
मुक्तायै ,,
मुक्तानांपरमगतये ,,
नारसिंह्यै ,,
सुजन्मायै ,,
त्रिवर्गफलदायिन्यै ,,
धर्मदायै ,,
धनदायै ,,
कामदायै ,,
मोक्षदायै ,,
द्युतये ,,
साक्षिण्यै ,,
क्षणदायै ,,
दक्षायै ,,
दक्षजायै ,,
कोटिरूपिण्यै ,,
ऋतवे ,,
५६० कात्यायन्यै ,,

५९१ ॐस्वच्छायै स्वा०/नमः
स्वच्छन्दायै ,,
कविप्रियायै ,,
सत्यागमायै ,,
बहिःस्थायै ,,
काव्यशक्तये ,,
कवित्वदायै ,,
मेनापुत्र्यै ,,
सतीमात्रे ,,
तेजोऽसि इत्यादि
मैनाकभगिन्यै ,,

(ध्यानम्)

६०१ ॐ तडिते नमः/स्वाहा
सौदामिन्यै ,,
स्वधामायै ,,
सुधामायै ,,
धामशालिन्यै ,,
सौभाग्यदायिन्यै ,,
दिवे ,,
सुभगायै ,,

ॐ द्युतिवर्द्धिन्यै नमः/स्वा०
श्रिये ,,
कृतिवसनायै ,,
कङ्काल्यै ,,
कलिनाशिन्यै ,,
रक्तबीजवधोद्दृप्तायै
सुतन्तवे ,,
बीजसन्ततये ,,
जगज्जीवायै ,,
जगद्बीजायै ,,
जगत्त्रयहितैषिन्यै ,,
चापीकररुचये ,,
चांद्रीसाक्षयाषोडशीकलायै
यत्तस्पदानुबन्धायै ,,
यक्षिण्यै ,,
धनदार्चितायै ,,
चित्रिण्यै ,,
चित्रमायायै ,,
विचित्रायै ,,
६२८ भुवनीश्वर्यै ,,

६२९ ॐ चामुण्डायै ९०/नमः
मुण्डहस्तायै ,,
चण्डमुण्डवधोद्धरायै
अष्टम्यै ,,
एकादश्यै ,,
पूर्णायै ,,
नवम्यै ,,
चतुर्दश्यै ,,
अमायै ,,
कलशहस्तायै ,,
पूर्णकुम्भधरायै ,,
धरायै ,,
अभीरवे ,,
भैरव्यै ,,
भीमायै ,,
भीरायै ,,
त्रिपुरभैरव्यै ,,
महारुण्डायै ,,
रौद्र्यै ,,
महाभैरवपूजितायै ,,

ॐ निर्मुण्डायै ९०/नमः
हस्तिन्यै ,,
चण्डायै ,,
करालदशनाननायै ,,
करालायै ,,
विकरालायै ,,
घोरघुर्घुरनादिन्यै ,,
रक्तदन्तायै ,,
ऊर्ध्वकेश्यै ,,
बंधूककुसुमारुणायै ,,
कादम्बर्यै ,,
पटासायै ,,
काश्मीर्यै
कुङ्कुमप्रियायै ,,
क्षान्तये ,,
बहुसुवर्णायै ,,
रतये ,,
बहुसुवर्णदायै ,,
मातङ्गिन्यै ,,
६६८ वरारोहायै ,,

६६९ ॐ मत्तमात्तङ्गगामिन्यै
हिंसायै ,,
हंसगतये ,,
हंस्यै ,,
हंसोज्ज्वलशिरोरुहायै
पूर्णचंद्रमुख्यै ,,
श्यामायै ,,
स्मितास्यायै ,,
श्यामकुण्डलायै ,,
मष्यै ,,
लेखिन्यै ,,
लेख्यायै ,,
सुलेखायै ,,
लेखकप्रियायै ,,
शङ्खिन्यै ,,
शङ्खहस्तायै ,,
जलस्थायै ,,
जलदेवतायै ,,
कुरुक्षेत्रावनये ,,
काश्यै ,,

ॐ मथुरायै स०/नमः
काञ्च्यै ,,
अवन्तिकायै ,,
अयोध्यायै ,,
द्वारिकायै ,,
मायायै ,,
तीर्थायै ,,
तीर्थकरप्रियायै ,,
त्रिपुष्करायै ,,
अप्रमेयायै ,,
कोशस्थायै ,,
ॐ तेजोऽसि इत्यादि
ॐ कोशवासिन्यै
(ध्यानम्)
७०१ कौशिक्यै नमः/स०
कुशावर्तायै ,,
कौशाम्ब्यै ,,
कोशवर्द्धिन्यै ,,
कोशदायै ,,
७०६ ॐ पद्मकोशाक्ष्यै

७०७ ॐ कुसुमायै स०/नमः
कुसुमप्रियायै ,,
तोतुलायै ,,
तुलाकोटये ,,
कोटस्थायै ,,
कोटराश्रयायै ,,
स्वयम्भुवे ,,
सुरुपायै ,,
स्वरुपायै ,,
रुपवर्द्धिन्यै ,,
तेजस्विन्यै ,,
सुभिक्षायै ,,
बलदायै ,,
बलदायिन्यै ,,
महाकोश्यै ,,
महावर्तायै ,,
बुद्धिसदसदात्मिकायै
महाग्रहहरायै ,,
सौम्यायै ,,
विशोकायै ,,
शोकनाशिन्यै ,,

ॐ सात्विक्यै स०/नमः
सत्वसंस्थायै ,,
राजस्यै ,,
रजोवृतायै ,,
तामस्यै ,,
तमोयुक्तायै ,,
गुणत्रयविभविन्यै ,,
अव्यक्तायै ,,
व्यक्तरुपायै ,,
वेदविद्यायै ,,
शाम्भिभव्यै ,,
शङ्कराकल्पिनीकल्पायै
मनः सङ्कल्पसन्ततये
सर्वलोकमयीशक्तये
सर्वश्रवणगोचरायै ,,
सर्वज्ञानवतीवांछायै
सर्वतत्वावबोधिन्यै ,,
जाग्रत्यै ,,
सुषुप्तये ,,
७४७ स्वप्नावस्थायै ,,

७४८ ॐ तुरीयकायै नमः/६०
त्वरायै ,,
मंदगतये ,,
मन्दायै ,,
मदिरामोदधारिण्यै ,,
पानभूमये ,,
पानपात्रायै ,,
पानदानकरोद्यतायै
आपूर्णारूणनत्रायै ,,
किंचिदव्यक्तभाषिण्यै
आशापूरायै ,,
दीक्षायै ,,
दक्षायै ,,
दीक्षितपूजितायै ,,
नागवल्ल्यै ,,
नागकन्यायै ,,
भोगिन्यै ,,
भोगवल्लभायै ,,
सर्वशास्त्रवतीविद्यायै
सुस्मृतये ,,

धर्मवादिन्यै ,,
श्रुतये ,,
श्रुतिधरायै ,,
ज्येष्ठायै ,,
श्रेष्ठायै ,,
पातालवासिन्यै ,,
मीमांसायै ,,
तर्कविद्यायै ,,
सुभक्तये ,,
भक्तवत्सलायै ,,
सुनाभये ,,
यातनायै ,,
जातये ,,
गम्भीरायै ,,
भाववर्जितायै ,,
नागपाषधरामूर्तये ,,
अगाधायै ,,
नागकुण्डलायै ,,
सुचक्रायै ,,
७८७ चक्रमध्यस्थायै ,,

७८८ ॐ चक्रकोणनिवासिन्यै नमः/स्वा०
सर्वमंत्रमयीविद्यायै ,,
सर्वमंत्राक्षरावलये ,,
मधुस्रवायै ,,
स्रवन्त्यै ,,
भ्रामर्यै ,,
भ्रमरालकायै ,,
मातृमण्डलमध्यस्थायै
मातृमण्डलवासिन्यै
कुमारजनन्यै ,,
क्रूरायै ,,
सुमुख्यै ,,
ॐ तेजोऽसि
८०० ज्वरनाशिन्यै ,,
अतीतायै ,,
विद्यमानायै ,,
भाविन्यै ,,
प्रीतिमञ्जर्यै ,,
सर्वसौख्यवतीयुक्तये
आहारपरिणामिन्यै
पञ्चभूतानांनिदानाय नमः/
भवसागरतारिण्यै ,,
अक्रूरायै ,,
ग्रहवत्यै ,,
विग्रहायै ,,
ग्रहवर्जितायै ,,
रोहिण्यै ,,
भूमिगर्भायै ,,
कालभुवे ,,
कालवर्तिन्यै ,,
कलङ्करहितानार्यै ,,
चतुष्षष्टयभिधावत्यै
जीर्णायै ,,
जीर्णवस्त्रायै ,,
नूतनायै ,,
नववल्लभायै ,,
अरजायै ,,
रतयै ,,
प्रीतये ,,
८२६ ॐ रतिरागविवर्द्धिन्यै

८२७ पंचवातगतिर्भिन्नायै ,,
पंचश्लेष्माशयाधरायै ,,
पंचपित्तवतीशक्तये ,,
पंचस्थानविबोधिन्यै ,,
उदक्यायै ,,
वृषस्यन्त्यै ,,
बहिःप्रस्त्राविण्यै ,,
रजः शुक्रधराशक्तये ,,
जरायवे ,,
गर्भधारिण्यै ,,
त्रिकालज्ञायै ,,
त्रिलिङ्गायै ,,
त्रिमूर्तये ,,
त्रिपुरवासिन्यै ,,
अरागायै ,,
शिवतत्वायै ,,
कामतत्वानुरागिण्यै ,,
प्राच्यै ,,
अवाच्यै ,,
प्रतीच्यै ,,

उदोच्यै ,,
विदिग्दिशायै ,,
अहंकृतये ,,
अहंकारायै ,,
बलिमायायै ,,
बलिप्रियायै ,,
स्त्रुचे ,,
स्त्रुवायै ,,
सामिधेन्यै ,,
सुश्रद्धायै ,,
श्राद्धदेवतायै ,,
मात्रे ,,
मातामह्यै ,,
तृप्तये ,,
पितृमात्रे ,,
पितामह्यै ,,
स्नुषायै ,,
दौहित्रिण्यै ,,
पुत्र्यै ,,
८६६ पौत्र्यै ,,

८६७ ॐ नप्त्र्यै स० नमः
शिशुप्रियायै ,,
स्तनदायै ,,
स्तनधारायै ,,
विश्वयोनये ,,
स्तनन्धय्यै ,,
शिशूत्सङ्गधरायै ,,
दोलायै ,,
दोलाक्रीडाभिनन्दिन्यै
उर्वश्यै ,,
कदल्यै ,,
केकायै ,,
विशिखायै ,,
शिखिनर्तन्यै ,,
खट्वाङ्गधारिन्यै ,,
खट्वायै ,,
बाणपंखानुवर्तिन्यै ,,
लक्ष्यप्राप्तये ,,
कलायै ,,
अलक्ष्यायै ,,

लक्ष्यायै स० नमः
शुभलक्षणायै ,,
वर्तिन्यै ,,
सुपथाचारायै ,,
परिखायै ,,
खनये ,,
वृतये ,,
प्राकारवलयायै ,,
वेलायै ,,
महोदधौ मर्यादायै ,,
पोषणीशक्तये ,,
शोषणीशक्तयै ,,
दीर्घकेश्यै ,,
ॐ तेजोऽसि इत्यादि
९०० ॐ सलोमशायै
(ध्यानम्)
ललितायै ,,
मांसलायै ,,
तन्व्यै ,,
९०४ ॐ वेदवेदाङ्गधारिण्यै

९०५ ॐ नरासृक्पानमत्तायै नमः
नरमुण्डास्थिभूषणायै ,,
अक्षक्रीडारतये ,,
शार्यै ,,
शारिका शुकभाषिण्यै ,,
शाम्बर्यै ,,
गारुडीविद्यायै ,,
वारुण्यै ,,
वरुणार्चितायै ,,
वाराह्यै ,,
मुण्डहस्तायै ,,
दंष्ट्रोद्धृतवसुन्धरायै ,,
मीनमूर्तिधरायै ,,
मूर्तायै ,,
वदन्यायै ,,
प्रतिमाश्रयायै ,,
अमूर्तायै ,,
निधिरूपायै ,,
सालिग्रामशि-
लाशुचये ,,

स्मृतये ९०/नमः
संस्काररूपायै ,,
सुसंस्कारायै ,,
संस्कृतये ,,
प्राकृतायै ,,
देशभाषायै ,,
गाथायै ,,
गीतये ,,
प्रहेलिकायै ,,
इडायै ,,
पिङ्गलायै ,,
पिङ्गायै ,,
सुषुम्णायै ,,
सूर्यवाहिन्यै ,,
शशिस्रवायै ,,
तालुस्थायै ,,
काकिन्यै ,,
अमृतजीविन्यै ,,
अणुरूपायै ,,
९४३ बृहद्रूपायै ,,

| | |
|---|---|
| ६४४ ॐ लघुरूपायै स०/नमः | प्रज्ञाजनयित्र्यै ,, |
| गुरुस्थिरायै ,, | बहुश्रुतये ,, |
| स्थावरायै ,, | निरीहायै ,, |
| जङ्गमायै ,, | समस्तैकायै ,, |
| देव्यै ,, | सर्वलोकैकसेवितायै |
| कृतकर्मफलप्रदायै ,, | सेवायै ,, |
| विषयाक्रान्तदेहाये ,, | सेवाप्रियायै ,, |
| निर्विशेषायै ,, | सेव्यायै ,, |
| जितेन्द्रियायै ,, | सेवाफलत्रिवर्द्धिन्यै ,, |
| विश्वरूपायै ,, | कलिकल्किप्रिया काल्यै |
| चिदानन्दायै ,, | दुष्टम्लेच्छविनाशिन्यै |
| परब्रह्मप्रबोधिन्यै ,, | प्रत्यञ्चायै ,, |
| निर्विकारायै ,, | धनुर्यष्टये ,, |
| निर्वैरायै ,, | खड्गधारायै ,, |
| विरतये ,, | दुरानतये ,, |
| सत्यवर्धिन्यै ,, | अश्वप्लुतये ,, |
| पुरुषाज्ञायै ,, | वल्गायै ,, |
| भिन्नायै ,, | सृणये ,, |
| क्षान्तिःकैवल्यदायिन्यै | ६८२ सन्मत्तवारुणायै |
| विविक्तसेविन्यै ,, | |

९८३ ॐवीरभुवे स्वा०/नमः
वीरमात्रे ,,
वीरसुवे ,,
वीरनन्दिन्यै ,,
जयश्रियै ,,
जयदीक्षायै ,,
जयदायै ,,
जयवर्द्धिन्यै ,,
सौभाग्यसुभगाकारायै
सर्वसौभाग्यवर्द्धिन्यै

क्षेमङ्कर्यै ,,
सिद्धिरूपायै ,,
सत्कीर्तये ,,
पथिदेवतायै ,,
सर्वतीर्थमयीमूर्तये ,,
सर्वदेवमयीप्रभायै ,,
सर्वसिद्धिप्रदाशक्तये,,
ॐ तेजोऽसि०
१००० ॐ सर्वमङ्गलमङ्गलायै
स्वाहाः / नमः

पुण्यं सहस्रनामेदमम्बाया रुद्रभाषितम् ।
चतुर्वर्ग प्रदं सत्यं नन्दिकेन प्रकाशितम्
नातः परतरो मंत्रो नातः स्तवः परतरः
नातः परतरा विद्या तीर्थं नातः परात्परम् ।
ते धन्याः कृतपुण्यास्ते त एव भुवि पूजिताः ।
एक भावं मुदानित्यं येऽर्चयन्ति महेश्वरीम् ।
देवतानां देवता या ब्रह्माद्यैर्या च पूजिता ।
भूयात्सा वरदा लोके साधूनां विश्वमङ्गला ।
एतामेव पुराराध्यां विद्यां त्रिपुरभैरवीम् ।
त्रैलोक्यमोहनं रूपमकार्षीद्भगवान् हरिः ।
माया कुण्डलिनी क्रिया मधमती काली कला मालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी
शक्तिशंकरवल्लभा त्रिनयना वाग्वादिनी भैरवी ।
ह्रींकारी त्रिपुरा परा परमयी माता कुमारीत्यसि ।
अनेन मन्त्रहोमेन आत्मनो वाग्मनः कायोपार्जित
पापनिवार्णार्थं महामाया जगदम्बा प्रसन्नार्थं ।
भवानीनाम सहस्रस्तवराजः (पाठः - होमः) समाप्तः ।

## अथ इन्द्राक्षीस्तोत्रम् ॥

ॐ अस्य श्रीइन्द्राक्षीस्तोत्रमन्त्रस्य, पुरन्दर ऋषिः, अनुष्टुप् छन्दः, श्री इन्द्राक्षी भगवती देवता, भुवनेश्वरी शक्तिः, माहेश्वरी कीलकं, गायत्री सावित्री सरस्वती कवचं, आत्मनो वाङ्मनः-कायोपार्जितपापनिवारणार्थं अमुककामनासिद्ध्यर्थे पाठे होमे विनियोगः ॥ ॥ लक्ष्म्यै अङ्गुष्ठाभ्यां नमः, भुवनेश्वर्यै तर्जनीभ्यां नमः, माहेश्वर्यै मध्यमाभ्यां नमः वज्रहस्तायै अनामिकाभ्यां नमः, सहस्रनयनायै कनिष्ठिकाभ्यां नमः, इन्द्राक्षीभगवत्यै करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ अथ षडङ्गन्यासः ॥ लक्ष्म्यै हृदयाय नमः, भुवनेश्वर्यै शिरसे स्वाहा, माहेश्वर्यै शिखायै वषट्, वज्रहस्तायै कवचाय हुँ, सहस्र-

नयनायै नेत्राभ्यां वौषट्, इन्द्राक्षीभगवत्यै
अस्त्राय फट् ॥ प्राणायामः ॥ ध्यानम् ॥

ॐ इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रधरां शुभाम् ।
वामे वज्रधरां सव्यहस्तेऽभयवरप्रदाम् ॥
सहस्रनेत्रां सूर्याभां नानालङ्कारभूषिताम् ।
प्रसन्नवदनां नित्यामप्सरोगणसेविताम् ॥
श्रीदुर्गां सौम्यवदनां पाशाङ्कुशधरां पराम् ।
त्रैलोक्यमोहिनीं देवीं भवानीं प्रणमाम्यहम् ॥

इन्द्र उवाच ॥

इन्द्राक्षी नाम सा देवी देवतैः समुदाहृता ।
गौरी शाकम्भरी देवी दुर्गानाम्नेति विश्रुता ॥
कात्यायनी महादेवी चण्डघण्टा महातपा ।
सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी ॥
नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला ।
अग्निज्वाला रुद्रमुखी कालरात्री तपस्विनी ॥

मेघश्यामा सहस्राक्षी विष्णुमाया जलोदरी ।
महोदरी मुक्तकेशी घोररूपा महाबला ॥
आनन्दा भद्रजानन्दा रोगहंत्री शिवप्रिया ।
शिवदूती कराली च प्रत्यक्षपरमेश्वरी ॥
इन्द्राणी चन्द्ररूपा च इन्द्रशक्तिः परायणा ।
महिषासुरसंहर्त्री चामुण्डा गर्भदेवता ॥
वाराही नारसिंही च भीमा भैरवनादिनी ।
श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती ॥
अनन्ता विजया पूर्णा मनस्तोषाऽपराजिता ।
भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा ॥
शिवा भवानी रुद्राणी शङ्करार्धशरीरिणी ❀
एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण धीमता ।
आयुरारोग्यमैश्वर्याऽपत्यसम्पत्तिकारकम् ॥
क्षयापस्मारकुष्ठादितापज्वरनिवारकम्
शतमावर्तयेद्यस्तु मुच्यते व्याधिबन्धनात् ॥

आवर्तयेत्सहस्रेण लभते वाञ्छितं फलम् ।
राजा वशमवाप्नोति सत्यमेव न संशयः ॥
लक्षमेकं जपेद्यस्तु साक्षाद्देवीं स पश्यति ।
त्रिकालं पठते नित्यं धनधान्यांश्च सम्पदः ॥
अर्धरात्रे पठेन्नित्यं मुच्यते व्याधिबन्धनात् ।
ऐन्द्रस्तोत्रमिदं पुण्यं जपे तु फलवर्धनम्
विनाशाय तु रोगाणामपमृत्युं हरत्युत ।
राज्यार्थी लभते राज्यं धनार्थी विपुलं धनम् ॥
इच्छाकामं तु कामार्थी धर्मार्थी धर्ममव्ययम् ।
विद्यार्थी लभते विद्यां मोक्षार्थी परमं पदम् ॥
इन्द्रेण कथितं स्तोत्रं सत्यमेव न संशयः ॥
या माया मधुकैटभप्रमथिनी या माहिषोन्मूलिनी
या धूम्रेक्षणचण्डमुण्डमथिनी या रक्तबीजाशनी ।
शक्तिःशुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः परा
सा देवी नवकोटिमूर्तिसहिता मां पातु माहेश्वरी ॥

जप्तं पापहरं नुतं बलकरं सम्पूजितं श्रीकरं
ध्यातं मानकरं स्तुतं धनकरं सम्भाषितं सिद्धदम् ।
गीतं सुन्दरि वाञ्छितं प्रतनुते ते पादपद्मद्वयं
भक्तानां भवभीतिभञ्जनकरं सिद्धयष्टदं पातु नः ॥

माया कुण्डलिनी क्रिया मधुमती काली कला
मालिनी / मातङ्गी विजया जया भगवती देवी शिवा
शाम्भवी/शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी
भैरवी/ह्रींकारी त्रिपुरा परापरमयी माता कुमारी-
त्यसि ॥ अनेन मन्त्रपाठेन आत्मनो वाङ्मनः
कायोपार्जितपापनिवारणार्थं श्रीइष्टदेवीप्रीत्यर्थं भग-
वती अमा कामा चार्वङ्गी टङ्कधारिणी तारा पार्वती
यक्षिणी श्रीशारिकाभगवती श्रीशारदाभगवती श्री-
महाराज्ञी भगवती श्रीज्वालाभगवती व्रीडाभगवती
वैखरीभगवती वितस्ताभगवती गङ्गाभगवती यमुना

भगवती कालिकाभगवती सिद्धलक्ष्मीः महा-
लक्ष्मीः महात्रिपुरसुन्दरी सहस्रनाम्नी देवी भवानी
सपरिवारा सवाहना सायुधा साङ्गा प्रीयतां
प्रीतास्तु ॥ ॥ इति इन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥

॥ ध्यानानि ॥

सृष्टौ संस्थापनाय त्वऽपहरणविधौ मोहनेऽनु-
ग्रहेऽपि सर्वेषामर्गलानां निजमहिमवशादक्रमेणात्र
याऽलम् । नित्यं क्रीडाप्रसक्ता रचयति सकलं
स्वात्मशक्त्या प्रपञ्चं सा नस्त्राणाय भूयादऽभिम-
तफलदा भद्रकाली च काली ॥ कालाम्बुवाहद्यु-
तिमिन्दुवक्त्रां तारावलीशोभिपयोधराढ्याम् । कपाल
पाशांकुशशूलहस्तां नीलाम्बरां यामवतीं नमामि ॥
खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुसुण्डीं शिरः
शङ्खं सन्दधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।

यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभं नीलाश्मद्युतिमाऽस्यपाददशकां सेवे महाकालिकाम् ॥ अक्षस्त्रक्परशूगदेषुकुलिशान्पद्मं धनुष्कुण्डिकां दण्डं शक्तिमसिं च चर्म जलदं घण्टां सुराभाजनम्। शूलं पाशसुदर्शनौ च दधतीं हस्तैः प्रवालप्रभैः सेवे सौरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिंवरम्। हस्ताब्जैर्दधतीं त्रिनेत्रविलसद् वक्त्रारविंद श्रियं देवीं बद्धहिमांशुरत्नमुकुटां वन्दे समन्दस्मिताम् कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुलेखां शङ्खं चक्रं कृपाणीं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम् । सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं ध्यायेद्दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥ ॥ घंटाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं

घनान्तविलसच्छीतांशुतुल्यप्रभाम् । गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनु भजे सुम्भादिदैत्यार्दिनीम् ॥ सिंहस्थां शशिशेखरामरकतप्रख्या चतुर्भिर्भुजैः शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिताम् । आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीक्वणन्नूपुरां दुर्गां दुर्गतिहारिणीं भवतुनी रत्नोल्लसत्कुण्डलाम् ॥ ध्यायेयं रत्नपीठे शुककलपठितं शृणवतीं श्यामलाङ्गीं न्यस्तैकाङ्घ्रिसरोजे शशिशकलधरां वल्लकीं वादयन्तीम् । कल्हाराबद्धमालानियमितविलसच्चूलिकां रक्तवस्त्रां मातङ्गीं शङ्खपात्रां मधुमदविवशां चित्रकोद्भासिभालाम् ॥ नागाधीश्वरविष्टरां फणिफणोत्तंसोरुरत्नावलीभास्वद्देहलतां विभाकरनिभां नेत्रत्रयोद्भासिताम् । मालाकुम्भकपालनीरजकरां चन्द्रार्धमौलिं परां सर्वेशेश्वरभैरवाङ्कनिलयां पद्मावतीं

चिन्तयेत् ॥ बन्धूककाञ्चननिभं रुचिराक्षमालां
पाशाङ्कुशौ च वरदं निजबाहुदण्डैः । बिभ्राण-
मिन्दुशकलाभरणं त्रिनेत्रमर्धाम्बिकेशमनिशं वपु-
राश्रयामि ॥ उत्तप्तहेमरुचिरां रविचन्द्रवह्निनेत्रां
धनुःशरयुताङ्कुशकामपाशान् । रम्यैर्भुजैश्च द-
शिवशक्तिरूपां कामेश्वरीं हृदि भजामि धृतेन्दु
लेखाम् ॥ उद्यद्दिनद्युतिमिन्दुकिरीटां तुङ्गकु
नयनत्रययुक्ताम् । स्मेरमुखीं वरदाङ्कुशपा
तिकरां प्रभजे भुवनेशीम् । विद्युद्दामसम
मृगपतिस्कन्दस्थितां भीषणां कन्याभिः कर
खेटविलसद्धस्ताभिरासेविताम् । हस्तैश्चक्रग
खेटविशिखांश्चापं गुणं तर्जनीं बिभ्राणामन
त्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरे ॥ बा
कंमण्डलाभांसंचतुर्बाहुं त्रिलोचनाम् ।
शि भजे ॥

शङ्कमलवर्णं ... र सब म ... ली
सब सम्पत्तियाके ... सदा निवास कर ॥ ३ ॥ उन व

पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि ।
परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते ॥ ७ ॥
श्वेताम्बरधरे देवि नानालङ्कारभूषिते ।
जगत्स्थिते जगन्मातर्महालक्ष्मि नमोऽस्तु ते ॥ ८ ॥
महालक्ष्म्यष्टकं स्तोत्रं यः पठेद्भक्तिमान्नरः ।
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥ ९ ॥
एककाले पठेन्नित्यं महापापविनाशनम् ।
द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः ॥१०॥
त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् ।
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥११॥

इतीन्द्रकृतं महालक्ष्म्यष्टकं सम्पूर्णम् ।

---

हे कमलके आसनपर विराजमान परब्रह्मस्वरूपिणि देवि ! हे परमेश्वरि ! हे जगदम्ब ! हे महालक्ष्मि ! तुम्हें मेरा प्रणाम है ॥ ७ ॥ हे देवि ! तुम श्वेत वस्त्र धारण करनेवाली और नाना प्रकारके आभूषणोंसे विभूषिता हो । सम्पूर्ण जगत्में व्याप्त एवं अखिल लोकको जन्म देनेवाली हो । हे महालक्ष्मि ! तुम्हें मेरा प्रणाम है ॥ ८ ॥ जो मनुष्य भक्तियुक्त होकर इस महालक्ष्म्यष्टक स्तोत्रका सदा पाठ करता है वह सारी सिद्धियों और राज्यवैभवको प्राप्त कर सकता है ॥ ९ ॥ जो प्रतिदिन एक समय पाठ करता है, उसके बड़े-बड़े पापोंका नाश हो जाता है । जो दो समय पाठ करता है, वह धन-धान्यसे सम्पन्न होता है ॥ १० ॥ जो प्रतिदिन तीन काल पाठ करता है उसके महान् शत्रुओंका नाश हो जाता है और उसके ऊपर कल्याणकारिणी वरदायिनी महालक्ष्मी सदा ही प्रसन्न होती हैं ॥ ११ ॥

छित्त्वा राहुग्रीवां पासि त्वं विबुधान्
दददासि मृत्युमनिष्टं पीयूषं विबुधान् ।
विहरसि दानव ऋद्धान् समरे संसिद्धान्
मध्वमुनीश्वरवरदे पालय संसिद्धान् ॥ जय देवि० ॥ ४ ॥

इति देव्या आरात्रिकं समाप्तम् ।



...य ! तुम्हारी जय हो ! जय हो ! ) ॥ ३ ॥ तुम राहुकी ग्रीवा काटकर ...वोंकी रक्षा करती हो, असुरोंको उनकी इच्छाके विपरीत मृत्यु और ...वताओंको अमृत देती हो, युद्धकुशल और वीर दैत्योंसे रण-क्रीड़ा ...ती हो । हे मध्वमुनीश्वरको वर देनेवाली ! भक्तोंका पालन ...े देवि ! ( तुम्हारी जय हो ! ) ॥ ४ ॥



## २५—श्रीसरस्वतीस्तोत्रम्

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ १ ॥

आशासु राशीभवदङ्गवल्ली
भासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं
वन्देऽरविन्दासनसुन्दरि त्वाम् ॥ २ ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥ ३ ॥

---

जो कुन्दके फूल, चन्द्रमा, बर्फ और हारके समान श्वेत हैं, जो शु[illegible] कपड़े पहनती हैं, जिनके हाथ उत्तम वीणासे सुशोभित हैं, जो श्[illegible] कमलासनपर बैठती हैं, ब्रह्मा, विष्णु, महेश आदि देव जिनकी [illegible] स्तुति करते हैं और जो सब प्रकारकी जडता हर लेती हैं, वे भ[illegible] सरस्वती मेरा पालन करें ॥ १ ॥ हे कमलपर बैठनेवाली सुन्दरी सर[illegible] तुम सब दिशाओंमें पुञ्जीभूत हुई, अपनी देहलताकी आभासे [illegible] क्षीर-समुद्रको दास बनानेवाली और मन्द मुसकानसे शरद्ऋतुके च[illegible]माके तिरस्कृत करनेवाली हो, तुमको मैं प्रणाम करता हूँ ॥ २ ॥ शरत्का[illegible] उत्पन्न कमलके समान मुखवाली और सब मनोरथोंको देनेवाली [illegible] सब सम्पत्तियोंके साथ मेरे मुखमें सदा निवास करें ॥ ३ ॥ उन [illegible]

मामिह जननि समुद्धर पतितं भवकूपे । ध्रुवपदम्।

दिव्यसुधाकरवदने कुन्दोज्ज्वलरदने
पदनखनिर्जितमदने मधुकैटभकदने ।
विकसितपङ्कजनयने पन्नगपतिशयने
खगपतिवहने गहने संकटवनदहने ।। जय देवि० ।। २

मञ्जीराङ्कितचरणे मणिमुक्ताभरणे
कञ्चुकिवस्त्रावरणे वक्त्राम्बुजधरणे ।
शक्रामयभयहरणे भूसुरसुखकरणे
करुणां कुरु मे शरणे गजनक्रोद्धरणे ।।जय देवि० ।।३

---

समान दिव्य मुखवाली, कुन्दपुष्पके-से स्वच्छ दाँतोंवाली, अपने नख-ज्योतिसे मदनको पराजित करनेवाली, मधुकैटभका संहार वाली, प्रफुल्लित कमल-समान नेत्रोंवाली, शेषशायिनी, गरुड़व दुराराध्या, संकटवनको भस्म करनेवाली (हे देवि ! तुम्हारी जय जय हो !) ।। २ ।। चरणोंमें नूपुर धारण करनेवाली, मणि और मो आभूषण धारण करनेवाली, चोली और वस्त्रोंसे सुसज्जित, कमलमुखी विघ्न-बाधाओंको दूर करनेवाली, ब्राह्मणोंके लिये आनन्ददायिनी, ग्राहका उद्धार करनेवाली हे देवि ! मुझ शरणागतपर कृपा क

प्रद्युम्नशिखरासीनां मातृचक्रोपिशोभिताम्।
पीठेश्वरीम् शिलारूपां शारिकाप्रणमाम्यहम्॥



# स्तोत्र पाठ-संग्रह

सम्पादक

श्री श्री जगद्-अम्बा शारिका चक्रेश्वर संस्था
हारी-पर्वत

# शुद्धिपत्रम्

| ठ | पंक्ति: | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १४ | हन्तकं | हन्तृकं |
| ४ | १९ | मरुणच्छार्यं | मरुणच्छायं |
| ५ | ९ | उमापते: | उमासुतं |
| ७ | २० | दाद्यरिस्य | दारिद्र्यस्य |
| ८ | ११ | शं वरोतु | शं करोतु |
| ९ | १० | उद्यद्भास्वतसमाभा | ..... समाभां |
| ११ | १९ | ममाम्यकुञ्जकुहाराद्धा | ममास्यकुहराद्धा |
| १२ | ७ | भुक्ताहारलसत् | मुक्ताहारलसत् |
| १२ | २१ | माला...स्तक | मालापुस्तक |
| १६ | २० | धर्मं | धर्मं |
| १८ | १४ | गृहिणा | गृहिणी |
| १९ | ७ | तदद्वद्व | तद्द्वन्द्वं |
| ३१ | १२ | क्षित्यन्त | क्षित्यन्तं |
| ३२ | १६ | त्यवश्म् | त्यवश्यम् |
| ३५ | ५ | भेधासि | मेधासि |
| ४४ | ११ | यशोदगर्भसम्भव: | यशोदागर्भसम्भवा |
| ४७ | १२ | तत्वैस्तै | तत्त्वैस्तै: |
| ५१ | २ | कमनाशा | कर्मनाशा |
| ५१ | १४-१५ | शट्चक्र | षट्चक्र |
| ५२ | ६ | षुष्पबाणेक्षु | पुष्पबाणेक्षु |
| ५३ | ३ | महिषासुरधातिनी | महिषासुरघातिनी |
| ५३ | १४ | वल्लातन्तुसमुत्थाना | वल्लीतन्तुसमुत्थाना |
| ५३ | २१ | मृगत्वक्ङ्मृणलोचना | मृगत्वङ्मृगलोचना |
| ५७ | | सुपृहा | सुस्पृहा |
| ५८ | १ | शङ्खहता | शङ्खहस्ता च |
| ५८ | १६ | सर्वश्रवगोचरा | सर्वश्रवणगोचरा |

| पृष्ट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४ | २ | जलोदरा | जलोदरी |
| ६४ | ५ | शिवादूती | शिवदूती |
| ६९ | १२ | हुतवहस्थिर्ति | हुतवह |
| ७२ | १८ | साबन्धो | सम्बन्ध |
| ७२ | २० | भूमिस्त्वयि | भूमिस्त्वयि |
| ७३ | ८ | गुणमखिलमद्य्भः | गुणमखिलमद्भ्यः |
| ७३ | २१ | ययर्लाक्षा | ययोर्लाक्षा |
| ७६ | २ | सत्का- | —सत्कार |
| ७७ | २ | सूर्येन्द्वग्नि | सूर्येन्द्वग्नि |
| ८० | १५ | भिरीशादिच | भिरीशाच |
| ८३ | ५ | दृतद्यवोम | दतलद्व्योम |
| ८८ | ४ | विस्तीर्णा | निस्तीर्णा |
| ८८ | १७ | अतर्क्यैश्वर्यं | अतर्क्यैश्वर्ये |
| ८९ | १४ | विस्फूजितमिदम् | विस्फूर्जितमि |
| ९१ | ४ | सपर्या | सपर्या |
| ९२ | २ | तदिमअपराध | तदिदमपराधद्वय |
| क | १३ | जिसक | जिसके |
| क | २१-२२ | प्रध्युम्न पोठ-प्रध्युम्न | प्रद्युम्नपीठ प्रद्युम्न |
| ख | १ | ,, | ,, |
| ग | १९ | भूल | मूल |
| घ | ३ | षोडषकोण | षोडशकोण |
| ङ | १० | आता था | आती थी |
| च | १ | पुयष्टक | पुर्यष्टक |
| च | ४ | पर्यष्टक | पुर्यष्टक |
| च | ९ | महाविद्यारं | महाविद्याएं |
| च | ११ | अभिप्रत | अभिप्रेत |
| च | १५ | हृस्व | हृस्व |
| ज | ११ | शैंवशास्त्र | शैवशास्त्र |
| ज | १९ | शवदर्शन | शैवदर्शन |

प्रिय भक्तगण (शारिका) स्तोत्र संग्रह का पाठ आरम्भ करने से पहिले निम्नलिखित त्रुटियों को ठीक करें ।

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १४ | प्रकृष्टिविभव | प्रकृष्टविभव |
| ७ | २२ | दार्घ्यरिस्य | दारिद्र्यस्य |
| ९ | ३ | कार्घ्यं | कार्यं |
| ११ | ११ | ममाम्य | ममास्य |
| १२ | १ | पुष्पावलिवन्दा | पुष्पावलिवृन्दा |
| १५ | ९ | साक्षस्रज | साक्षस्रजं |
| २२ | १० | निहितात्ति | निहितार्ति |
| २३ | ३ | चिन्तयत्यन्वेवि | चिन्तयत्तन्वेति |
| २३ | १२ | लुग्पन्ति | लुम्पन्ति |
| २३ | १५ | धवति | धावति |
| २७ | १६ | पृथुतरवुच | पृथुतरकुच |
| २८ | २० | षडधल | षडदल |
| २९ | ९ | द्वादशदशं | द्वादश दलं |
| ४४ | ११ | यशोदगर्भं | यशोदागर्भं |
| ४८ | ६ | विभम् | विभुम् |
| ५१ | १५ | शटचक्रभे | षटचक्रभे |
| ५४ | ११ | सिन्दूरोरुणवकत्रा | सिन्दूराहणवकत्रा |
| ५८ | ३ | तीर्थंकर | तीर्थंकर |
| ५८ | १६ | सर्वश्रवगोचरा | सर्वश्रवणगोचरा |
| ६० | ९ | उदक्यागत | उदक्या च |
| ६० | १७ | पौत्री शिशुप्रिया | पौत्रीनप्त्री शिशुप्रिया |

| पृष्टम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६६ | ६ | मोहनेऽनुग्रहेषि | मोहनेऽनुग्रहेपि |
| ७० | ४ | षट्पञ्चाशाधिवस | षट्पञ्चाशद्दिवस |
| ७० | ८ | स्फटिकघुटिका | सफ़टिकगुटिका |
| ७२ | २१ | परिगमयितं | परिणमयितुँ |
| ७३ | ८ | निखलमद्य्भः | |
| ७३ | २१ | ययलीक्षा | ययोर्लीक्षा |
| ७५ | १६ | कारैकचिद्रपिणी | कारैकचिद्रषिणी |
| ७५ | १६ | चैतन्यात्मकैकचक्ररचिता | चक्राकैकाकिनी |
| ७६ | १४ | श्रचक्र | श्रीचक्र |
| ८२ | ७ | त्रिजगन्मार्तहिम | त्रिजगन्मातार्हेम |
| ८३ | ५ | सदृतद्यवो | सदृतसद्व्यो |
| ८४ | ३ | मूलमधेः | मूलमधः |
| ८४ | ११ | कार्यविधायिनी | कार्यविद्यायिनि |
| ८५ | १५ | मन्र्तनिषणम् | मन्र्तनिषण्णम् |
| ८६ | १८ | सर्वपापघ्नं | सर्वपापघ्न |
| ९० | १४ | परिनतिम | परिणतिम |
| ९१ | ९ | समर्तृणां | स्मर्तृणां |
| ९२ | २ | तदिमअपराध | तदिदमपराध |
| ९२ | १९ | महेशान्नाषरो | महेशान्नापरो |
| ९३ | ९ | भृत्यो भर्ता | भृत्यो न भर्ता |
| ९५ | २ | कदम्बंप्रसवित्रीम् | कदम्बप्रसवित्रीम् |
| ९५ | ६ | चाप्यचरं | क्वाप्यचरं |
| ९५ | १० | सिद्धिसम्पत्ति | सिद्धिसम्पत्ति |

# भूमिका

भक्त जनों को विदित ही है कि अनादिकाल से काश्मीर शाक्त-धामों में से एक मुख्यतम धाम है जो केन्द्र भी समझा जाता है। यहां पर शारदा ज्वाला, बीडा, महाराज्ञी, शिवा शारिका के अनुपम धाम हैं प्राचीन काल से श्रीनगर की प्रतिष्ठा बहुत बड गई थी। यहां पर श्रीविद्या जगदम्बा आद्याशक्ति भगवती के पांच मुख्य धाम हैं जो क्रमशः श्रीराजराजेश्वरी श्रीकाले-श्वरी, श्रीमहाश्री, श्रीसदभावश्री श्रीलौकेश्वरी हैं इन्ही बिशिष्ट शाक्तधामों की सत्ता के फलस्वरूप श्रीनगर का नामकरण हुआ था। इनमें से श्रीराजराजेश्वरी की महत्ता केवल इसलिए थी कि यह स्थान श्रीनगर के मध्य प्रदेश में स्थित था। श्रीनगर की जनता के लिए चारों ओर से यहां पहुँचना सुगम था। यहां पर शक्तिमाता का अनादिकालोन महाचक्र प्रतिष्ठित था। जिसक प्रतिष्ठापक के अथवा प्रतिष्ठा के विषय में यह कहा जाता है कि यह स्वयम्भूचक्र था। अर्थात माता शारिका वागीश्वरी के स्वयंसिद्ध योजना रूप प्रयास के फल स्वरूप शारिकापर्वत के विश्व में प्रवृत्त होने के साथ वहां पर श्रीचक्र अस्तित्व में आया था, इसी कारण अनन्तर इसका नाम श्रीपर्वत भी पाया जाता है। इस स्थान का नाम प्रद्युम्न-शिखर भी पड गया था। यहीं पर श्रीशारिका देवी एक महासुर (बकासुर) को दमन के निमित्त आविर्भूत हुई थी इस स्थान को शारिकापीठ एवं प्रध्युम्नपीठ भी कहते थे। कारण यह है स्थानीय नरेश प्रध्युम्न ने अपने कर कमलों

द्वारा उक्तस्थान का परिष्कार किया था। तब से इसे प्रद्युम्न-पीठ भी कहते थे। जब जब दैवी, मानुषी आपदाओं का काश्मीर को शिकार होना पडा तब २ भक्त एवं साधक काश्मीरी जनता इसी पवित्र स्थान के शरण में आकर इसी का आश्रय लेती रही और अनुपम तथा अद्भुतसिद्धियों का चमत्कार देखकर इस स्थान का नाम सिद्धपीठ भी पड गया था तथा आजकल यह स्थान सिद्धपीठ के नाम से ही यहां परम प्रसिद्ध है। इस पवित्र स्थान से सम्बन्धित कितने ही चमत्कारी आख्यान विश्व भर में विश्रुत हैं। इस स्थान को छोडकर काश्मीरी भक्त जनता किसी अन्य शाक्त धाम को उतना चमत्कारपूर्ण तथा सिद्धिदायक नहीं समझती थी जितना कि इस परमरहस्यमय शाक्तधाम को, ब्रह्माण्डपुराण, योगवासिष्ठ तथा भृङ्गीश संहिता आदि में इस स्थान का विशिष्ट तथा प्रखर वर्णन पाया जाता है। कामकला स्वातन्त्र्यशक्ति श्री-राजराजेश्वरी की महिमा देशभर में विख्यात थी जिसका प्रभाव अब तक हिन्दू जनता में अक्षुण्णरूप से ज्यों का त्यों पाया जाता है, यही कारण है तीन बार यहां यवन शासकों की द्वारा प्रवर्तित नभटुब योजना (मुहिम) सफल न होने पाई जिसके मूल में आद्या शक्ति भगवती की अनुग्रह शक्ति है सुना जाता है विना किसी भेदभाव एवं अन्तर के काश्मीरी जनता श्रीराजराजेश्वरी देवी को आदरभाव एवं भक्तिभावना से देखते थे। यही कारण है यहां के मुसलमान लोग हारब्रार के नाम से इसे पूजकर मान्यता की दृष्टि से देखते थे तथा विशिष्ट एवं प्रियशपथ के अवसर पर सबको सहज में इसकी याद आती थी तथा कोई भी व्यक्ति चाहे वह किसी भी सम्प्रदाय से सम्बन्ध रखता हो इस स्थान को आदर की दृष्टि से देखता था सुलतान फतह शाह के राज्यकाल में जब

मीर शम्सदीन ईराकी शियामत के प्रचार के सम्बन्ध में यहां आये तो उन्होंने विशेषरूप से इस स्थान की महिमा गाते हुए प्राय: विधर्मी मुसलमानों को पाया था तथा एक घुडसवार को श्रीपीठ की ओर सिजदा देते हुए देखकर उसने विचारा नभटुब योजना के सफल हो जाने पर भी ब्रह्मणों का भक्ति धर्म यहां पूर्णरूप से पनपचुका है मुस्लिम काश्मीर होने पर भी ब्रह्मणत्व किसी न किसी रूप में यहां पर उपलब्ध होता है। अतः सिजदा देने वाले के नाम तत्काल कत्ल का सज़ा जारी हुआ साथ ही शाही फर्मान से मन्दिर तथा श्रीपीठ को ढहाने का हुकम जारी किया गया। फलस्वरूप काश्मीर नरेश श्रीनाज्जुक शाह के शासन काल में श्रीपीठ को ढहाकर नष्टभ्रष्ट किया गया। अब प्राय: ४०० वर्षों क अनन्तर काश्मीरी हिन्दु जनता के अदम्य, एव उत्कट साहस और तीव्र उद्योग के कारण इस पुरातन शाक्त धाम (पीठ) पर पुन: मन्दिर का निर्माण किया गया। इसके विषय में श्रीराजराजेश्वरी जगदम्बिका की प्रेरणा ही काश्मीरी जनता के उद्यम का मूल-कारण है।

## ( श्रीचक्र का स्वरूप )

श्रीचक्र का आरम्भ योनिचक्र से हुआ है जिसका मूल स्वरूप त्रिकोण होता है और जिसका मूलस्वरूप एम ▽ बीज से होता है कइयों का विचार है यहां पर मातृकाओं ब्राह्मी, वैष्णवी, माहेश्वरी, कौमारी आदि की रेखाएं स्वत: स्वयंसिद्ध आधारशिला पर प्रादुर्भूत होती है तथा अब भी कभी २ पैदा होती हैं यह तीन रेखाएं मुख्यतया इच्छा, ज्ञान, क्रिया, परा, पश्यन्ती, मध्यमा, भू भुव: स्वर उदात्त, अनुदात्त, स्वरित्त तथा इडा पिङ्गला, सुषुम्णा, पदत्रयी एव परा, अपरा तथा

परापरा आदि के त्रित्व का प्रतीक है यह ही आद्या शक्ति त्रिपुरसुन्दरी त्रिजगन्नायिका का स्वरूप है। इसी प्रकार से श्रीचक्र के अन्तर्गत वसुकोण, दशकोण, षोडषकोण की भी अपनी २ अलग परिभाषाएं हैं।

बिन्दुत्रिकोण वसुकोण दशारयुग्मम-
न्वश्रनागदलसंयुतषोडशारम्।
वृत्तत्रयञ्च धरणीसदनत्रयञ्च
श्रीचक्रराजमुदितं परदेवतायाः॥

यह सर्वसम्मत सिद्धान्त है कि काश्मीर शक्ति धामों से एक मुख्यतम पीठ है तथा तान्त्रिक उपासना का आधार एवं त्रिकोण का आश्रय श्रीयन्त्र अथवा श्रीचक्र ही है और इसी में शाक्त उपासना होती है। भारतवर्ष के शीर्षस्थान पर काश्मीर की सत्ता है अतएव अन्यान्य शक्ति पीठों की अपेक्षा से इस देश का महात्म्य ऋषिप्रणीत ग्रन्थों में वर्ण-नातीत कहा है। यही कारण है यहां पर स्थान २ पर माता शक्ति के विकास का आविर्भाव हुआ है श्रीचक्र का ही नामान्तर मातृकाचक्र है क्योंकि इसका साक्षात सम्बन्ध ब्राह्मी, वैष्णवी, रौद्री, आदि मातृकाओं एवं योगिनियों से हैं। इस यन्त्र में प्रायः तीन अथवा चारवर्णों (रंगों) का उपयोग होता था जिनमें सफेद, पीला लाल और श्याम वर्ण सम्मिलित है इनमें से श्वेत और पीत सत्त्वप्रधान ब्राह्मी शक्ति का प्रतीक है एवं रजःप्रधान रक्तवर्ण वैष्णवी शक्ति का द्योतक है तथा तमः प्रधान श्यामवर्ण (नीलवर्ण) रौद्री शक्ति का ज्ञापक है पर स्मरण रहे काश्मीरियों ने रजोगुण प्रधान रक्तवर्ण को

ही प्रधानता दी है अतः जहां तहां तेज के प्रतीकभूत सिन्दूर तथा लाख से लिप्त देव देवी की प्रतिमाएं पायी जाती हैं मातृका चक्र का आधार स्वरूप कुलग्राम तहसील के अन्तर्गत मातृका-ग्राम के समीप (वर्तमान मात्रगोम, अथवा मित्रगोम) अक्कहार के आस पास मातृका चक्र की आधारशिला चक्रोपल (आधुनिक चकपल है) अर्थात एक विशाल चट्टान है।

राजतरंगिणी वर्णनानुसार आजकल भी उक्त चट्टान पर योगिनियों के पदचिह्न मिलते हैं और जो कभी २ शाक्त-पूजा के अवसर पर कश्मीर नरेशों के प्रयोग तथा अनुष्ठान पर उपयोग में आता था आरम्भ में ही हम लिख चुके हैं कि योनिचक्र ही ▽ मुख्यतया श्रीचक्र का स्वरूप है बिन्दु ही एकमात्र इसका मुख्यबीज है इसमें तीन ∵ बिन्दु प्रयुक्त होते हैं जो क्रमशः पूर्णाहन्ता, परमशिव तथा जडाजड विश्व के ज्ञापक है यह तीन बिन्दु ज्ञाता, ज्ञान, ज्ञेय, प्रमाता, प्रमाण, प्रमेय, सूर्य, चन्द्र, वह्नि, हरि, हर, हिरण्यगर्भ इच्छा, ज्ञान, क्रिया, सत्त्व, रज, तम, मन, बुद्धि, अहंकार आदि के प्रतीक माने जाते हैं यह ही प्रकाश विमर्श अथवा विसर्ग से अभि-प्रेत हैं बिन्दुरूप प्रकाश ही अन्तर्मुख अनुसार स्वरूप 'अहम्' है वह ही बहिर्मुखावस्था में विमर्शस्वरूप, होता है वास्तव में विमर्श ही विसर्गस्वरूप होता है यही बिन्दुत्रय राजराजे-श्वरी त्रिपुरसुन्दरी त्रिजन्नायिका का दिव्यस्वरूप है कन्या कुमारी द्वीप का स्वरूप मूलतः त्रिकोण ही है एवं समस्त विश्व का स्वरूप त्रिकोण तथा नवकोणात्मक है यही अन्तर्मुख बिन्दुस्वरूप प्रकाश का विसर्ग विमर्शरूप है अर्थात विश्वाकार में बहिर्मुख रूप है इसी प्रकार वसुकोण दशकोण चतुष्कोण, (चतुर्दल) अष्टदल षोडशदल वृत्तत्रय तथा भू पर चक्र है

इनमें से अष्टार चक्र रचना से अभिप्राय है पुयष्टक तथा आठ योगिनियों से पुर्यष्टक में मन, बुद्धि, अहंकार तथा पञ्च-तन्मात्राएं अन्तर्गत होते हैं अथवा मन बुद्धि, अहंकार तथा पञ्चतन्मात्राएं पर्यष्टक कहलाता है एवं वशिन्यादि आठ से तथा ब्राह्मी, माहेशी, वष्णवी, कौमारी, वाराही, ऐन्द्री, चा-मुण्डा, महालक्ष्मी मातृकाए विवक्षित हैं दशकोण से अन्तर्दशार और बहिर्दशारयुग्म विवक्षित है अन्तर्दशार में पूर्वोक्त पुर्यष्टक तथा कामेश्वर तथा कामेश्वरी रूप दो तेज अपेक्षित हैं एवं दशमहाविद्याएं तथा दश महातत्त्व भी अपेक्षित होते हैं और इसका स्वरूप सर्वज्ञा आदि दश देवताओं के रूप में होता है वहिर्दशार से ज्ञानेन्द्रिय ५ तथा कर्मेन्द्रिय ५ अभिप्रत हैं चतुर्दश कोण में दस इन्द्रियां मन, बुद्धि, चित्त और अन्तः-करण चतुष्टय के साथ चौदह कोण होते हैं इसी प्रकार से इसमें चतुर्दश स्वर विवक्षित हैं जो अ से लेकर औ पर्यन्त १२ मात्राएं तथा ह्रस्व दीर्घ मिलाकर चौदाह मात्राएं होती हैं एवं आद्या दस विद्याए उपर्युक्त मनस्तत्त्व बुद्धितत्त्व अहंकार और चित्त के समेत चौदह कोण बनते हैं।

षोडश दलों का निम्नलिखित तत्त्वों से अभिप्राय है १ मन २ बुद्धि ३ अहंकार ४ शब्द, ५ स्पर्श ६ रूप ७ रस ८ गन्ध ९ चित्त १० धैर्य ११ स्मृति १२ नाम १३ वार्धक्य १४ सूक्ष्म शरीर १५ जीवन १६ स्थूल शरीर, इसके अतिरिक्त तान्त्रिक पक्ष में इन सब चक्रों की अलग २ अधिष्ठाता स्वरूप देवताएं भी नियत हैं अन्तिम चक्र भू पर है जिसका बाहरी रेखाओं से सम्बन्ध है इनके दलों में तान्त्रिक क्रम से सम्पूर्ण वर्णमाला के अक्षर क्रम तथा व्युत्क्रम से सन्निविष्ट होते हैं

भू चक्र ही अन्तिम है इन नव चक्रों के नाम और वर्ण क्रमानुसार नीचे लिखे जाते हैं।—

१ सर्वानन्दमय (केन्द्रस्थ रक्तबिन्दु)
२ सर्वसिद्धिप्रद (पीले रंग का त्रिकोण)
३ सर्वरक्षाकर (हरे रंग का ८ त्रिकोण)
४ सर्वरोगहर (काले रंग का १० त्रिकोण)
५ सर्वार्थसाधक (लाल रंग के १० त्रिकोण)
६ सर्वसौभाग्यदायक (नीले रंग के १४ त्रिकोण)
७ सर्वसंक्षोभण (गुलाबी रंग के आठ दलों का कमल)
८ सर्वाशापरिपूरक (पीले रंग के सोलह दलों का कमल)
९ त्रैलोक्यमोहन (बाहरी तीन रेखाएं)

वर्णविन्यास का क्रम काम कला विलास तन्त्र के आधार पर लिखा है, प्राचीन समय में ताम्रपट पर श्रीयन्त्र को उत्कीर्ण कर (खोदकर) लिखा जाता था जो पवित्रता की दृष्टि से अत्युत्तम समझा जाता था तथा फलदायक भी होता था चारों धामों में जो आद्य शंकराचार्य द्वारा प्रतिष्ठापित थे श्रीचक्रों के सौम्य यन्त्र उपलब्ध होते हैं जिन में से श्रृङ्गेरी (मैसूर) में अत्युत्तम श्रीयन्त्र मिलता है एवं गढवाल में ओजस्वी तथा रहस्यमय श्रीपीठ था जहां श्रीयन्त्र के कारण एक अन्य श्रीनगर भी है।

श्रीचक्र में प्रथम बिन्दुचक्र की अधिष्ठात्री देवता ललिता अथवा त्रिपुरसुन्दरी है जिसका स्वरूप केवल बिन्दु से बनता है। दूसरे त्रिकोण चक्र की अधिष्ठात्री देवता त्रिपुराम्बा है तीसरे अष्टकोण (अष्टार) की अधिष्ठात्री देवी है त्रिपुरसिद्धा इसी प्रकार से अन्तर्दशाररूप चतुर्थ तथा बहिर्दशाररूप पंचम चक्र की स्वामिनी त्रिपुरमालिनी तथा त्रिपुराश्री है छटे

चतुर्दशार चक्र की अधिष्ठात्री त्रिपुरवासिनी है। सातवें अष्ट-दल एवं आठवें षोडशदल की अधिष्ठात्री क्रमश: त्रिपुरसुन्दरी तथा त्रिपुरेशी हैं नवम भूपुरचक्र की (जो बिन्दु त्रिकोण अष्ट-दल षोडशदल स्वरूप चतुरस्र है बिन्दु त्रिकोण को छोडकर सहस्रार स्वरूप शून्यचक्र से आधारचक्र पर्यन्त इन्ही के प्रतीक माने जाते हैं। इसी चक्र की समष्टिरूप से इष्टदेवी श्री-जगदम्बा अष्टदशभुजा श्रीशारिका है, अष्टादश संख्या अठारह विद्याओं के बोधक हैं एवं दस इन्द्रियां पंच महाभूत प्रकृति मन, बुद्धि तत्त्व से अठारह बनते हैं जो देवी के भुजाओं के सूचक प्रतीत होते हैं एवं मौलिक अठारह तत्त्वों के ज्ञापक है जिनका स्फार ३६ तत्त्वों से होता है। शवशास्त्र के विद्वान इनकी परिभाषा इस प्रकार से देते है इच्छा, ज्ञान, क्रिया, जो तीन मुख्य शक्तिया शैव दर्शन की हैं इनमें से इच्छा शक्ति में तीनों शक्तियों का समावेश होता है इसी प्रकार से ज्ञान तथा क्रिया शक्ति में स्वत: यह तीन २ शक्तियां समाविष्ट होती हैं और इस तरह से इनकी संख्या ९ बनती हैं जो सूक्ष्म तथा स्थूलरूप से औ दो प्रकार होती है इस तरह इनकी संख्या १८ होती हैं जो मूलत: अठारह भुजों के प्रतीक हैं प्रधानतया काश्मीर में शैवदर्शन का सार्वत्रिक प्रचार था अत: इस दृष्टि से उनका यह मत युक्तियुक्त प्रतीत होता है। वर्णविन्यासक्रम का श्रीचक्र के चित्र में स्वष्टीकरण किया जायेगा जो आगामिनी आषाढ नवमी को एक पुस्तका के रूप में भक्तजनता की सेवा में भेंट की जायेगी।

उों शान्ति शान्ति: शान्ति:।

चक्रेश्वर संस्था — दीना नाथ शास्त्री (राजबाग)<br>
शारिका पर्वत श्रीनगर — जिया लाल नगरी।

## ।। अथ गणेशस्तोत्रम् ।।



शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् प्रसन्नवदनं ध्याये-त्सर्वविघ्नोपशान्तये । अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः । गणानामधिपश्चण्डो गज-वक्त्रस्त्रिलोचनः प्रसन्नो भवतान्नित्यं वरदाता विनायकः । सुमुखश्चै-कदन्तश्च कपिलो गजकर्णकः लम्बोदरश्च विकटो विघ्नराजो विना-यकः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः द्वादशैतानि नामानि गणेशस्य समाहितः । यः पठेत्तु शिवोक्तानि स लभेत्सिद्धिमुत्तमाम् विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ओं ॥ चिदचित्पदगम्भीरं गमागमपदोज्झितम् गहना-काशसंकाशं वन्दे देवं गणेश्वरम् । श्रीसनत्कुमार उवाच । शङ्कराद्-ब्रह्मणा प्राप्तं पद्मयोनेर्मया प्रभोः तदहं कीर्तयिष्यामि स्तोत्रं परम-दुर्लभम् । षष्ठ्यां चतुर्थ्यामष्टम्यां चतुर्दश्यां च भक्तितः पूजयेच्च गणा-ध्यक्षं श्रद्धाभक्तिसमन्वितः । अर्घैः पुष्पैस्तथा धूपैर्दीपैर्माल्यैश्च चा-मरैः वस्त्रैः कुण्डलकेयूरैर्मौलिभिश्च वितानकैः । भक्ष्यैर्भोज्यैरपूपैश्च

मत्स्यैर्मांसैश्च मोदकैः पानकैः फलमूलैश्च होमैर्मन्त्रादिभिस्तथा। गङ्गाह्रदे तु गाङ्गेयं श्रीशैले तु गणेश्वरम् वाराणस्यां गजमुखं गयायां टङ्कधारिणम्। प्रयागे तु गणाध्यक्षं केदारे विकटाननम् लम्बोदरं कुरुक्षेत्रे नैमिषे च मदोत्कटम्। जम्बकं दण्डकारण्ये लोकेशं हिमवद्गिरौ विष्वक्सेनं च विन्ध्याद्रौ मलये हेमकुम्भकम्। नायकं पुष्करद्वीपे विघ्नेशं शल्मलौ स्थितम् इलावृते विश्वरूपं हरिवर्षे वटोदरम्। त्रिनेत्रं सिंहलद्वीपे श्वेतद्वीपे तु वामनम् उज्जयिन्यां तु लम्बोष्ठं मालवे शूर्पकर्णकम्॥ सौराष्ट्रे वरदं नित्यं काश्मीरे भीमरूपिणम् सिन्धुसागरयोर्मध्ये विज्ञेयं मन्त्रनायकम्। कैलासे परमेश्वरम् महोदर तु लुम्पायां चम्पायां शिखिवाहनम्। पाशहस्तं त्रिकूटेषु पूजयेत्सर्वसिद्धिदम् बलमग्निगुहायां तु पाटले सिंहवाहनम्। पौण्ड्रे रौद्रमुखं चापि कलापिग्रामके जयम्। मेरुपृष्ठे कामरूपं नन्दनं नन्दने वने॥ विजयं वै गन्धवने देवदारुवने गणम् आर्तानां विघ्नहरणं गङ्गासागरसङ्गमे॥ महापथे विरूपाक्षं चित्रसेनं तु पुष्करे दुर्जयं यमुनातीरे स्तम्भनं गन्धमादने॥ अम्बरीषं भद्रवटे मोहनं हस्तिनःपुरे। किष्किन्धायामुग्रकेतुं लङ्कायां तु विभीषणम्। कलिङ्गे वरुणं चैव विन्ध्यपादे मदोत्कटम् अश्वत्थं च तुरुष्केषु चीनेषु त्रिशिखायुधम्॥ वज्रहस्तं कोसलेषु दाक्षिणात्येषु लोहितम् शूलोद्धतकरं चैव मध्यदेशे प्रकीर्तितम्। एकदंष्ट्रं पश्चिमाद्रौ पूर्वदेशेऽपराजितम् उत्तरे चारुवक्त्रं च वरिष्ठं त्रिपुरेषु च॥ हिरण्यकवचं चैव गिरिसन्धिषु संस्थितम् सुमुखं नागरन्ध्रेषु नगरे... च षड्भुजम्॥

थेश्वरं वा कदाचित् । न जानामि चान्यत् सदाहं शरण्ये । गतिस्त्वं ॥६॥ विवादे विषादे प्रमादे प्रवासे जले चानले पर्वते शत्रुमध्ये । अरण्ये शरण्ये सदा मां प्रपाहि । गतिस्त्वं० ॥७॥ अनाथो दरिद्रो जरारोगयुक्तो महाक्षीणदीनः सदा जाड्यवक्त्रः । विपत्तौ प्रविष्टः प्रणष्टः सदाहम् । गतिस्त्वं ॥८॥

इति श्रीमच्छङ्कराचार्यकृतं भवान्यष्टकं सम्पूर्णम् ।

---

## अथ गौरीस्तुतिः ॥

ॐ लीलारब्धस्थापितलुप्ताखिललोकां लोकातीतैर्योगिभिरन्तर्हृदि मृग्याम् । बालादित्यश्रेणिसमानद्युतिपुञ्जां गौरीमम्बामम्बुरहाक्षीमहमीडे ॥१॥ आशापाशक्लेशविनाशं विदधानां पादाम्भोजध्यानपराणां पुरुषाणाम् । ईशीमीशाङ्गार्धहरां तां तनुमध्यां गौरीमम्बा० ॥२॥ प्रत्याहारध्यानसमाधिस्थितिभाजां नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम् । सत्यज्ञानानन्दमयीं तां तडिदाभां गौरी० ॥३॥ चन्द्रापीडानन्दितमन्दस्मितवक्त्रां चन्द्रापीडालङ्कृतलोलाकभाराम् । इन्द्रोपेन्द्राद्यर्चितपादाम्बुजयुग्मां गौरी० ॥४॥ नानाकारैः शक्तिकदम्बैर्भुवनानि व्याप्य स्वैरं क्रीडति यासौ स्वयमेका । कल्याणीं तां कल्पलतामानतिभाजां गौरी० ॥५॥ मूलाधारादुत्थितवन्तीं विधिरन्ध्रं सौरं चान्द्रं धाम विहाय ज्वलिताङ्गीम् । स्थूलां

सूक्ष्मां सूक्ष्मतरां तामभिवन्द्यां गौरीं० ॥६॥ आदिक्षान्तामक्षर-मूर्त्या विलसन्तीं भूते भूते भूतकदम्बं प्रसवित्रीम । शब्दब्रह्मानन्द-मयीं तामभिरामां गौरी० ॥७॥ यस्याः कुक्षौ लीनमखण्डं जग-दण्डं भूयो भूयः प्रादुरभूदक्षतमेव । भर्त्रा सार्धं तां स्फटिकाद्रौ विहरन्तीं गौरी० ॥८॥ यस्यामेतत्प्रोतमशेषं मणिमाला सूत्रे यद्व-त्क्वापि चरं चाप्यचरं च । तामध्यात्मज्ञानपदव्या गमनीयां गौरी० ॥९॥ नित्यः सत्यो निष्कल एको जगदीशः साक्षी यस्याः सर्ग-विधौ संहरणे च । विश्वत्राणक्रीडनशीलां शिवपत्नीं गौरी० ॥१०॥ प्रातःकाले भावविशुद्धिं विदधानो भक्त्या नित्यं जल्पति गौरीदशकं यः । वाचां सिद्धिसम्पत्तिमुच्चैः शिवभक्तिं तस्यावश्यं पर्वतपुत्री विदधाति ॥११॥ इति गौरीस्तुतिः ॥

ओं शम